# अथ बृहत्सदाशिवसंहिता

॥ तत्र श्रुतिरहस्ये श्लोकाः ॥

**॥ सनकादय ऊचुः ॥**

सदाशिव महायोगिन् योगिध्येयपदाम्बुज ।
प्रपन्नाः शरणं त्वाद्य शरणागतवत्सल ॥ १ ॥
क्षराक्षराक्षरातीताः पुरुषाश्चेति विश्रुताः ।
कृष्णलीलाविशेषं च कथयाद्य विवेकतः ॥ २ ॥

**॥ सदाशिव उवाच ॥**

शृणुतेदं महाभागा रहस्यं परमाद्भुतम् ।
सर्वगुह्यतमं गोप्यं प्रियाय कथयामि वः ॥ ३ ॥
अव्याकृतविहारोऽसौ क्षर इत्यभिधीयते ।

---

१ अव्याकृतो नाम अक्षरस्वभावो मूलप्रकृतिरेव । 'अव्याकृता हि प्रकृतिः परमा स्वमाया' इति मार्कण्डेयात्। सा द्विधा विद्याऽविद्या च । तत्र विद्याशक्त्याक्षरबुद्धेर्नित्यविहारः । अविद्याशक्त्याक्षरमनसः प्राकृतविहारः। तत्र विद्याशक्त्यां कालस्वभावकर्मणां बीजम् । यदास्यामक्षरमनःप्रवेशस्तदा तस्य कालस्वभावकर्मणां भानं भवति । सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते इति कालस्त्रुट्यादिद्विपरार्धान्तो मूर्तामूर्तरूपः सच्चिदादिगुणात्मकः । तत्र सत्त्वं नाम सदैकरसेन स्थितत्वम् । चित्त्वं नाम परिपूर्णज्ञानमयत्वम् । आनन्दत्वं नाम सदाखण्डसुखमयत्वम् । तेषु कालशक्त्या क्षोभः । स्वभावशक्तिर्द्विधा । आवरणरूपा विक्षेपरूपा च । तत्रावरणशक्त्या स्वरूपविस्मृतिः । विक्षेपशक्त्या स्वरूपान्तरत्वम् । कर्मशक्त्यास्य विजिहीर्षा । ततश्चैकस्यानेकत्वनानात्वबुभूषा एकोऽहं बहु स्यामिति श्रुतेः । ततश्चास्यां प्रकृत्यां महत्तत्त्वहिरण्मयवीर्याधानम्। महतोऽहंकारः। स च त्रिगुणमयः । तमसो महाभूतानि पञ्चतन्मात्राणि । रजसा दशेन्द्रियाणि । सत्त्वाच्चत्वार्यन्तरिन्द्रियाणि चतुर्दशेन्द्रियप्रकाशकदेवताश्च । तानि च सर्वाणि पुरुषशक्तिप्रेरितानि मिलित्वा अण्डं जनयंति । तत्र स्वेच्छया प्रविष्टः पुरुषः नारायण इति संज्ञां लभते । नारायणात् ब्रह्मा । ततो मन्वादिक्रमेण देवनरतिर्यगादयः सर्वे भूतसर्गाः। अत्रेश्वरो भगवानेकः सर्वनि-

तत्पर त्वक्षरं ब्रह्म वेदगीतं सनातनम् ॥ ४ ॥
उत्तमस्त्वक्षरातीतश्चिद्रूप उभयाश्रयः ।
तत्प्रियानन्दरूपा च सदात्मा त्वक्षरः स्मृतः ॥ ५ ॥
अक्षराग्निनखज्योतिर्ब्रह्म यन्निर्गुणात्मकम् ।
नानावतारनिलयं कारणं यदसत्सतोः ॥ ६ ॥
कृष्ण एवाक्षरातीतः सच्चिदानन्दलक्षणः ।
प्रियाभिः प्रार्थितः प्रेम्णा रेमे वृन्दावने विभुः ॥ ७ ॥
विप्रलम्भविहारार्थं प्रियामनुगतः प्रभुः ।
व्रजमाव्रज्य सांशेनाक्षरबुद्ध्याविशद्धरौ ॥ ८ ॥
वृन्दावनाश्रयालीला साक्षरात्परतः परा ।
गुह्याद्गुह्यतरागम्या नित्याक्षरहृदि स्थिता ॥ ९ ॥
यद्ब्रह्मपरमैश्वर्यं नित्यवृन्दावने स्थितम् ।
तदेव गोकुले प्रोक्तं बाल्यकैशोरभेदवत् ॥ १० ॥
वैकुण्ठवैभवं यच्चं मथुराद्वारकाश्रितम् ।

---

यन्ता नानारूपेण तिष्ठति । तस्य सर्वस्वरूपस्य प्रधानं रूपद्वयम्। साकारो निराकारश्च । साकारो महाविष्णुः स एव नारायणः । सर्वावतारा ऋषयो भवो भागवताश्च ये । कलाः सर्वे हरेरेव ब्रह्माद्याश्च सुरोत्तमा इति । निराकारश्च सर्वान्तर्यामी सर्वत्र परिपूर्णः सत्तात्मकः प्रकाशमयः सर्वज्ञ इति । स च सर्वः प्रकृतिपुरुषविषयः प्राकृतमण्डलाश्रयः सूक्ष्मस्थूलात्मकश्चिदचिन्मयः स एव अव्याकृतविहारः । स एव सर्वो मिलितः क्षरः पुरुष इत्यभिधीयते ।

१ विप्रलंभो वियोगः रसस्य द्वितीयं दलम् । संयोगेन निजधाम्नि नित्यविहारः । विप्रलंभस्य द्वारभूतोऽक्षरो व्याससंहितायां (२३।३०) कथितः । तद्भृदयेऽव्याकृतविहारोऽप्यस्ति स प्राकृतविहारः अक्षरमनसोत्थः तत्र विप्रलंभः सिध्येत ।

२ पद्मपुराणे वृंदावनरहस्येपि एषोर्थो दर्शितो यथा--
"गोलोकैश्वर्ययत्किञ्चिद्गोकुले तत्प्रतिष्ठितम् ।
वैकुंठवैभवं यच्च द्वारिकायां प्रकाशितम् ॥ १ ॥"
वाराहसंहितायामप्येषः श्लोक उपलभ्यते । श्रीमाहेश्वरतंत्रे तु—
'श्वेतद्वीपस्य तु च्छाया मथुरायां प्रतिष्ठिता' (२५।१६) इति विशेषः ।

मध्ये वृन्दामधुवनं यच्च मध्याळयाश्रयम् ॥ ११ ॥
श्रुतिभिः संस्तुतो रासे तुष्टः कामवरं ददौ ।
वृन्दावनं मधुवनं तयोरभ्यन्तरे विभुः ॥ १२ ॥
ताभिः सप्तदिनं रेमे वियुज्य मथुरां गतः ।
चतुर्भिर्दिवसैरीशः कंसादीननयत्परम् ॥ १३ ॥
तत आदाय तद्धाम गूढं गोपीहृदि स्थितम् ।
सदाविनाक्षिप्तचित्तास्तत्पदं श्रुतयो ययुः ॥ १४ ॥
ततो मधुपुरीमध्ये भुवो भारजिहीर्षया ।
यदुचक्रावृतो विष्णुरुवास कतिचित्समाः ॥ १५ ॥
ततस्तु द्वारकां यातस्ततो वैकुण्ठमास्थितः ।
एवं गुह्यतरः प्रोक्तः कृष्णलीलारसास्त्रिधा ॥ १६ ॥
आनन्दरूपा याः सख्यो व्रजे वृन्दावने स्थिताः ।
कलौ प्रादुर्भविष्यन्ति पुनर्यास्यन्ति तत्पदम् ॥ १७ ॥
चिदावेशवती बुद्धिरक्षरस्य महात्मनः ।
प्रबोधाय प्रियाणां च कृष्णस्य परमात्मनः ॥ १८ ॥
मुक्तिदा सर्वलोकानां भविता भारताजिरे ।
प्रसरिष्यति हृद्देशे स्वामिन्याः प्रभुणेरिता ॥ १९ ॥
एवं सम्प्राप्तविज्ञाना विनिद्रा ब्रह्मणः प्रियाः ।
प्राप्स्यन्ति परमानन्दं परिपूर्णमनोरथाः ॥ २० ॥
एतद्वो वर्णितं विप्राः किमन्यच्छ्रोतुमर्हत ।
तूष्णीं तिष्ठत तं कालं प्रतीच्छन्तो महत्तमाः ॥ २१ ॥

॥ इति श्रीबृहत्सदाशिवसंहितांतर्गतश्रुतिरहस्यम् ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३२९४ ॥